श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपाद

विरचिता

# श्रीमद्भगवद्गीतार्थसंग्रहा

क्लीं कृष्णाय गोविन्दाय
गोपीजनवल्लभाय स्वाहाः।।

# श्री गीता माहात्म्य

ॐ पार्थाय प्रतिबोधितां भगवता नारायणेन स्वयं
व्यासेन ग्रथितां पुराणमुनिना मध्येमहाभारतम्।
अद्वैतामृतवर्षिणी भगवतीमष्टादशाध्यायिनी-
मम्ब त्वामनुसन्दधामि भगवद्गीते भवद्वेषिणीम्।।१।।

नमोऽस्तु ते व्यास विशालबुद्धे
फुल्लारविन्दायतपत्रनेत्र।
येन त्वया भारततैलपूर्णः
प्रज्वालितो ज्ञानमयः प्रदीपः।।२।।

प्रपन्नपारिजाताय स्तोत्रवेत्रैकपाणये।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः।।३।।

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्।।४।।

वसुदेवसुतं देवं कंसचानूरमर्दनम्।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्।।५।।

भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोत्पला
शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला।
अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्तिनी
सोत्तीर्णा खलु पाण्डवैः रणनदी कैवर्तके केशवे।।६।।

पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटं
नानाख्यानककेसरं हरिकथासम्बोधनाबोधितम्।
लोके सज्जनषट्दैरहरहः पेपीयमानं मुदा
भूयाद्भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे।।७।।

मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम्।
यत्कृपा तमहं वन्दे परमानन्दमाधवम्।।८।।

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै-
र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः।।९।।

***

अथ

## प्रथमोऽध्यायः

धृतराष्ट्र उवाच

धर्मक्षेत्रे कुरुक्षेत्रे सर्वक्षत्रसमागमे।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय।।१।।

सञ्जय उवाच

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत्।।२।।
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता।।३।।
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि।
युयुधानो विराटश्च द्रुपदश्च महारथः।।४।।
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्।
पुरुजित्कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः।।५।।

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः।।६।।
अस्माकं तु  विशिष्टा ये तान्निबोध द्विजोत्तम
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते।।७।।
सैन्ये महति ये सर्वे नेतारः शूरसंमताः।
भवान्भीष्मश्च कर्णश्च कृपः शल्यो जयद्रथः।।८।।
अश्वत्थामा विकर्णश्च सौमदत्तिश्च वीर्यवान्।
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः।।९।।
नानाशस्त्रप्रहरणा नानायुद्धविशारदाः।
अपर्याप्तं तदस्माकं बलं भीमाभिरक्षितम्।।१०।।
पर्याप्तं त्विदमेतेषां बलं भीष्माभिरक्षितम्।
अयनेषु च सर्वेषु यथाभागमवस्थिताः।।११।।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि।
तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः।।१२।।

सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान्।
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः।।१३।।
सहसैवाभिहन्यन्त स शब्दस्तुमुलोऽभवत्।
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ।।१४।।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः।
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः।।१५।।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः।
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः।।१६।।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ।
काश्यश्च परमेष्वासः शिखण्डी च महारथः।।१७।।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः।
पाञ्चालश्च महेष्वासो द्रौपदेयाश्च पञ्च ये।।१८।।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक्।
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्।।१९।।

नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन्।
अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः।।२०।।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः।
हृषीकेशं तदा वाक्यमिदमाह महीपते।।२१।।

अर्जुन उवाच

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत।
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्।।२२।।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे।
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः।।२३।।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः।

सञ्जय उवाच

एवमुक्तो हृषीकेशो गुडाकेशेन भारत।।२४।।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम्।
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्।।२५।

उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति।

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान्।।२६।।

आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा।

श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि।।२७।।

तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान्।

कृपया परयाविष्टः सीदमानोऽब्रवीदिदम्।।२८।।

अर्जुन उवाच

दृष्ट्वेमान्स्वजनान्कृष्ण युयुत्सून्समवस्थितान्।

सीदन्ति मम गात्राणि मुखं च परिशुष्यति।।२९।।

वेपथुश्च शरीरे मे रोमहर्षश्च जायते।

गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते।।३०।।

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।

निमित्तानि च पश्यामि विपरीतानि केशव।।३१।।

न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे।

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च।।३२।।

किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा।
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च।।३३।।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च।
आचार्याः पितरः पुत्रास्तथैव च पितामहाः।।३४।।
मातुलाः श्वशुराः पौत्राः स्यालाः संबन्धिनस्तथा।
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन्।।३५।।
अपि त्रैलोक्यराज्यस्य हेतोः किमु महीकृते।
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन।।३६।।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः।
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान्।।३७।।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव।
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः।।३८।।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्।
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम्।।३९।।

कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन।
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः।।४०।।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत।
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः।।४१।।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः।
संकरो नरकायैव कुलघ्नानां कुलस्य च।।४२।।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः।
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः।।४३।।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः।
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन।।४४।।
नरके नियतं वासो भवतीत्यनुशुश्रुम।
अहो वत महत्पापं कर्तुं व्यवसिता वयम्।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः।।४५।।
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्।।४६।।

सञ्जय उवाच

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत्।
विसृज्य सशरं चापं शोकसंविग्नमानसः।।४७।।

अत्र संग्रहश्लोकः

विद्याविद्योभयाघातसंघट्टविवशीकृतः।
युक्त्या द्वयमपि त्यक्त्वा निर्विवेको भवेन्मुनिः।।१।।

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(विषादयोगो नाम) प्रथमोऽध्यायः।।१।।
इति शिवम्।।

अथ

# द्वितीयोऽध्यायः

सञ्जय उवाच

तं तथा कृपयाविष्टमस्त्रुपूर्णाकुलेक्षणम्।
सीदमानमिदं वाक्यमुवाच मधुसूदनः।।१।।

श्रीभगवानुवाच

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन।।२।।

मा क्लैव्यं गच्छ कौन्तेय नैतत्त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप।।३।।

अर्जुन उवाच

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन।।४।।

गुरूनहत्वा हि महानुभावा-
ञ्छ्रेयश्चर्तुं भैक्षमपीह लोके।

न त्वर्थकामस्तु गुरून्निहत्य
भुञ्जीय भोगान् रुधिरप्रदिग्धान्।।५।।

नैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः।
यानेव हत्वा न जिजीविषाम-
स्ते नः स्थिताः प्रमुखे धार्तराष्ट्राः।।६।।

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वं प्रपन्नम्।।७।।

नहि प्रपश्यामि ममापनुद्या-
द्यः शोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम्।।८।।

सञ्जय उवाच

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तप।
न योत्स्यामीति गोविन्दमुक्त्वा तूष्णीं बभूव ह।।९।।
तमुवाच हृषीकेशः प्रहसन्निव भारत।
सेनयोरुभयोर्मध्ये सीदमानमिदं वचः।।१०।।

श्रीभगवानुवाच

त्वं मानुष्येणोपहतान्तरात्मा
विषादमोहाभिभवाद्विसंज्ञः।
कृपागृहीतः समवेक्ष्य बन्धू-
नभिप्रपन्नान्मुखमन्तकस्य।।११।।
अशोच्याननुशोचंस्त्वं प्राज्ञवन्नाभिभाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः।।१२।।
नह्येवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमितः परम्।।१३।।

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति।।१४।।

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत।।१५।।

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते।।१६।।

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः।।१७।।

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति।।१८।।

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
विनाशिनोऽप्रमेयस्य तस्माद्युद्ध्यस्व भारत।।१९।।

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते।।२०।।

न जायते म्रियते वा कदाचि-

न्नायं भूत्वा भविता वा न भूयः।

अजो नित्यः शाश्वतोऽयं पुराणो

न हन्यते हन्यमाने शरीरे।।२१।।

वेदाविनाशिनं नित्यं य एनमजमव्ययम्।

कथं स पुरुषः पार्थ हन्यते हन्ति वा कथम्।।२२।।

वासांसि जीर्णानि यथा विहाय

नवानि गृह्णाति नरोऽपराणि।

तथा शरीराणि विहाय जीर्णा-

न्यन्यानि संयाति नवानि देही।।२३।।

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।

न चैनं क्लेदयन्त्यापो न शोषयति मारुतः।।२४।।

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।

नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः।।२५।।

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि।।२६।।
अथचैनं नित्यजातं नित्यं वा मन्यसे मृतम्।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि।।२७।।
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि।।२८।।
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना।।२९।।

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैनमन्यः।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित्।।३०।।

देही नित्यमवध्योऽयं देहे सर्वस्य भारत।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि।।३१।।

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते।।३२।।
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुकृतात्क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्।।३३।।
अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि।।३४।।
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते।।३५।।
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम्।।३६।।
अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्।।३७।।
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः।।३८।।

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि।।३९।।
एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां श्रृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि।।४०।।
नेहातिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्।।४१।।
व्यवसायात्मिका बुद्धिरेकैव कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्।।४२।।
यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादपराः पार्थ नान्यदस्तीतिवादिनः।।४३।।
कामात्मानः स्वर्गपरा जन्मकर्मफलेप्सवः।
क्रियाविशेषबहुला भोगैश्वर्यगतीः प्रति।।४४।।
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम्।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते।।४५।।

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्।।४६।।
यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः।।४७।।
कर्मण्यस्त्वधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।।४८।।
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते।।४९।।
यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान्।।५०।।
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः।।५१।।
बुद्धियुक्तो जहातीमे उभे सुकृतदुष्कृते।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्।।५२।।
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्।।५३।।

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च।।५४।।
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चिता।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि।।५५।।

अर्जुन उवाच

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।
स्थिरधीः किं प्रभाषेत किमासीत व्रजेच्च किम्।।५६।।

श्रीभगवानुवाच

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते।।५७।।
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते।।५८।।
यः सर्वत्रानाभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता।।५९।।

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वतः।
इन्द्रियाणीन्द्रियार्थेभ्यः स्थिरप्रज्ञस्तदोच्यते।।६०।।
विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते।।६१।।
यत्तस्यापि हि कौन्तेय पुरुषस्य विपश्चितः।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः।।६२।।
तानि संयम्य मनसा युक्त आसीत मत्परः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता।।६३।।
ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते।।६४।।
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति।।६५।।
रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति।।६६।।

प्रसादे सर्वदुःखानां हानिरस्योपजायते।

प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते।।६७।।

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।

न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्।।६८।।

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।

तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि।।६९।।

तस्माद्यस्य महाबाहो निगृहीतानि सर्वतः।

इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।७०।।

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।

यस्यां जाग्रति भूतानि सा रात्रिः पश्यतो मुनेः।।७१।।

आपूर्यमाणमचलप्रतिष्ठं

समुद्रमापः प्रविशन्ति यद्वत्।

तद्वत्कामा यं प्रविशन्ति सर्वे

स शान्तिमाप्नोति न कामकामी।।७२।।

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति।।७३।।
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति।।७४।।

अत्र संग्रहश्लोकः

अहो नु चेतसश्चित्रा गतिस्त्यागेन यत्किल।
आरोहत्येव विषयाञ्छ्रयंस्तांस्तु परित्यजेत्।।२।।

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(सांख्य योग नाम) द्वितीयोऽध्यायः।।२।।

अथ

## तृतीयोऽध्यायः

### अर्जुन उवाच

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव।।१।।
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्।।२।।

### श्रीभगवानुवाच

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्।।३।।
न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।
न च संन्यसनादेव सिद्धिं समधिगच्छति।।४।।
नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः।।५।।

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान्विमूढात्मा मूढाचारः स उच्यते।।६।।
यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते।।७।।
नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः।।८।।
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर।।९।।
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्।।१०।।
देवान्भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।११।।
इष्टान्कामान्हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः।।१२।।

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्।।१३।।
अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः।।१४।।
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्।।१५।।
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति।।१६।।
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते।।१७।।
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः।।१८।।
कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि।।१९।।

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते।।२०।।
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन।
नानवाप्तमवाप्तव्यं प्रवर्तेऽथ च कर्मणि।।२१।।
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्तेरन्मनुष्याः पार्थ सर्वशः।।२२।।
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः।।२३।।
तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः।।२४।।
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम्।।२५।।
न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्।।२६।।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि भागशः।
अहंकारविमूढात्मा कर्ताहमिति मन्यते।।२७।।
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।
गुणा गुणार्थे वर्तन्ते इति मत्वा न सज्जते।।२८।।
प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत्।।२९।।
मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः।।३०।।
ये मे मतमिदं नित्यमनुवर्तन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकर्मभिः।।३१।।
ये त्वेतदभ्यसूयन्तो नानुवर्तन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः।।३२।।
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति।।३३।।

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ।।३४।।
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मोदयादपि।।३५।।

अर्जुन उवाच

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छमानोऽपि बलादाक्रम्येव नियोजितः।।३६।।

श्रीभगवानुवाच

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्।।३७।।

अर्जुन उवाच

भवत्येष कथं कृष्ण कथं चैव विवर्धते।
किमात्मकः किमाचारस्तन्ममाचक्ष्व पृच्छतः।।३८।।

श्रीभगवानुवाच

एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैः सह।

सुखतन्त्र इवासीनो मोहयन्पार्थ तिष्ठति।।३९।।

कामक्रोधमयो घोरः स्तम्भहर्षसमुद्भवः।

अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः।।४०।।

हर्षमस्य निवर्त्यैष शोकमस्य ददाति च।

भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः।।४१।।

स एष कलुषी क्षुद्रश्छिद्रप्रेक्षी धनञ्जय।

रजःप्रवृत्तो मोहात्मा मनुष्याणामुपद्रवः।।४२।।

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।

यथोल्वेनावृतो गर्भस्तथानेनायमावृतः।।४३।।

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।

कामरूपेण कौन्तेय दुष्पूरेणानलेन च।।४४।।

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।

एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम्।।४५।।

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मानं प्रजहीह्येनं ज्ञानविज्ञाननाशनम्।।४६।।
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः।।४७।।
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।
जहि शत्रुं महाबाहो कामरूपं दुरासदम्।।४८।।

अत्र संग्रहश्लोकः

धनानि दारान्देहं च योऽन्यत्वेनाधिगच्छति।
किं नाम तस्य कुर्वन्ति क्रोधाद्याश्चित्तविभ्रमाः।।३।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(कर्मयोगे नाम) तृतीयोऽध्यायः।।३।।

## अथ

## चतुर्थोऽध्यायः

### श्रीभगवानुवाच

एवं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्।।१।।
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।
स कालेनैव महता योगो नष्टः परन्तप।।२।।
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यमेतदुत्तमम्।।३।।

### अर्जुन उवाच

अपरं भवतो जन्म परं जन्म विवस्वतः।
कथमेवं विजानीयां त्वमादौ प्रोक्तवानिति।।४।।

श्रीभगवानुवाच

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप।।५।।
अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया।।६।।
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मांशं सृजाम्यहम्।।७।।
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे।।८।।
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन।।९।।
वीतरागभयक्रोधा मन्मया मद्व्यपाश्रयाः।
बहवो ज्ञानतपसा पूता मद्भावमागताः।।१०।।
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः।।११।।

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा।।१२।।
चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्।।१३।।
न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते।।१४।।
एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्।।१५।।
किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात्।।१६।।
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः।।१७।।
कर्मण्यकर्म यः पश्यत्यकर्मणि च कर्म यः।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत्।।१८।।

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः।

ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः।।१९।।

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।

कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः।।२०।।

निराशीर्यताचित्तात्मा त्यक्तसर्वपरिग्रहः।

शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्।।२१।।

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।

समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते।।२२।।

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।

यज्ञायारभतः कर्म समग्रं प्रविलीयते।।२३।।

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।

ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना।।२४।।

दैवमेवापरे यज्ञं योगिनः पर्युपासते।

ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति।।२५।।

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति।।२६।।
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते।।२७।।
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः।।२८।।
अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः।।२९।।
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः।।३०।।
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम।।३१।।
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे।।३२।।

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते।।३३।।

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः।।३४।।

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि।।३५।।

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि।।३६।।

यथैधांसि समिद्धोऽग्निर्भस्मसात्क्रियतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।।३७।।

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति।।३८।।

श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति।।३९।।

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः।।४०।।
योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय।।४१।।
तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः।
छित्वैवं संशयं योगमातिष्ठोत्तिष्ठ भारत।।४२।।

अत्र संग्रहश्लोकः

विधत्ते कर्म यत्किञ्चिदक्षेच्छामात्रपूर्वकम्।
तेनैव शुभभाजः स्युस्तृप्ताः करणदेवताः।।४।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(संन्यासयोगो नाम) चतुर्थोऽध्यायः।।४।।

## अथ

## पञ्चमोऽध्यायः

### अर्जुन उवाच

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्।।१।।

### श्रीभगवानुवाच

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते।।२।।
ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते।।३।।
सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्।।४।।
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति स पश्यति।।५।।

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति।।६।।
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते।।७।।
नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यञ्श्रृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्श्वसन्स्वपन्।।८।।
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्।।९।।
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा।।१०।।
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मसिद्धये।।११।।
युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।
अयुक्तः कामकारेण फले सक्तो निबध्यते।।१२।।

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देहे नैव कुर्वन्न कारयन्।।१३।।
न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते।।१४।।
नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।।१५।।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्।।१६।।
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धौतकल्मषाः।।१७।।
स्मरन्तोऽपि मुहुस्त्वेतत्स्पृशन्तोऽपि स्वकर्मणि।
सक्ता अपि न सज्जन्ति पङ्के रविकरा इव।।१८।।
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः।।१९।।

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः।।२०।।
बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्।
स ब्रह्मयोगयुक्तात्मा सुखमव्ययमश्नुते।।२१।।
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः।।२२।।
शक्नोतीहैव यः सोढुं प्राक् शरीरविमोचनात्।
कामक्रोधोद्भवं वेगं स योगी स सुखी मतः।।२३।।
अन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः।
स पार्थ परमं योगं ब्रह्मभूतोऽधिगच्छति।।२४।।
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः।।२५।।
कामक्रोधविमुक्तानां यतीनां यतचेतसाम्।
सर्वतो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम्।।२६।।

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ।।२७।।
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः।।२८।।
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति।।२९।।

अत्र संग्रहश्लोकः

सर्वाण्येवात्र भूतानि समत्वेनानुपश्यतः।
जडवद्व्यवहारोऽपि मोक्षायैवावकल्पते।।५।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(कर्मसंन्यासयोगो नाम) पञ्चमोऽध्यायः।।५।।

अथ

## षष्ठोऽध्यायः

श्रीभगवानुवाच

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः।।१।।

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।
नह्यसंन्यस्तसंकल्पो योगी भवति कश्चन।।२।।

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते।।३।।

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जति।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते।।४।।

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।।५।।

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः।
अजितात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत्।।६।।

जितात्मनः प्रशान्तस्य परात्मसु समा मतिः।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः।।७।।
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः।।८।।
सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते।।९।।
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः।।१०।।
योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः।।११।।
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्।।१२।।
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये।।१३।।

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन्।।१४।।
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः।।१५।।
युञ्जन्नेवं सदात्मानं मद्भक्तोऽनन्यमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति।।१६।।
योगोऽस्ति नैवात्यशतो न चैकान्तमनश्नतः।
न चातिस्वप्नशीलस्य नातिजागरतोऽर्जुन।।१७।।
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा।।१८।।
यदा विनियतं चित्तमात्मन्येवावतिष्ठते।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा।।१९।।
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनि।।२०।।

यत्रोपरमते चित्तं निरुद्धं योगसेवनात्।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति।।२१।।
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः।।२२।।
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन स्थितो न दुःखेन गुरुणापि विचाल्यते।।२३।।
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा।।२४।।
सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः।।२५।।
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत्।।२६।।
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव शमं नयेत्।।२७।।

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्।।२८।।
युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति।।२९।।
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः।।३०।।
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति।।३१।।
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते।।३२।।
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः।।३३।।

अर्जुन उवाच

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं पराम्।।३४।।

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्।।३५।।

श्रीभगवानुवाच

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते।।३६।।
असंयतात्मनो योगो दुष्प्राप इति मे मतिः।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः।।३७।।

अर्जुन उवाच

अयतः श्रद्धयोपेतो योगाच्चलितमानसः।
लिप्समानः सतां मार्गं प्रमूढो ब्रह्मणः पथि।।३८।।
अनेकचित्तो विभ्रान्तो मोहस्यैव वशं गतः।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति।।३९।।
कच्चिन्नोभयविभ्रंशाच्छिन्नाभ्रमिव नश्यति।
अप्रतिष्ठो महाबाहो विनाशं वाधिगच्छति।।४०।।

एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः।
त्वदन्यः संशयस्यास्य च्छेत्ता नह्युपपद्यते।।४१।।

श्रीभगवानुवाच

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।
नहि कल्याणकृत्कश्चिद्दुर्गतिं जातु गच्छति।।४२।।

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।।४३।।

अथवा योगिनामेव जायते धीमतां कुले।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्।।४४।।

तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्।
ततो भूयोऽपि यतते संसिद्धौ कुरुनन्दन।।४५।।

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन्।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते।।४६।।

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम्।।४७।।

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन।।४८।।
योगिनामापि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः।।४९।।

***

अत्र संग्रहश्लोकः

भगवन्नामसंप्राप्तिमात्रात्सर्वमवाप्यते।
फलिताः शालयः सम्यग्वृष्टिमात्रेऽवलोकिते।।६।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(आत्मसंयम योगो नाम) षष्ठोऽध्यायः।।६।।

अथ

## सप्तमोऽध्यायः

श्रीभगवानुवाच

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रितः।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु।।१।।

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा न पुनः किंचिज्ज्ञातव्यमवशिष्यते।।२।।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः।।३।।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा।।४।।

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्।।५।।

एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।।६।।

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।।७।।
रसोऽहमप्सु कौन्तेय प्रकाशः शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु।।८।।
पुण्यः पृथिव्यां गन्धोऽस्मि तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु।।९।।
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम्।।१०।।
बलं बलवतामस्मि कामरागविवर्जितम्।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ।।११।।
ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान्विद्धि नत्वहं तेषु ते मयि।।१२।।
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम्।।१३।।

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।।१४।।
न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययापहृतज्ञाना आसुरं भावमाश्रिताः।।१५।।
चतुर्विधा भजन्ते मां जनाः सुकृतिनः सदा।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ।।१६।।
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।।१७।।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्।।१८।।
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः।।१९।।
कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया।।२०।।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्।।२१।।
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान्हितान्।।२२।।
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि।।२३।।
अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
परं भावमजानन्तो ममाव्ययमनुत्तमम्।।२४।।
नाहं प्रकाशः सर्वस्य योगमायासमावृतः।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम्।।२५।।
वेदाहं समतीतानि वर्तमानानि चार्जुन।
भविष्यन्ति च भूतानि मां तु वेद न कश्चन।।२६।।
इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप।।२७।।

येषां त्वन्तं गतं पापं जनानां पुण्यकर्मणाम्।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः।।२८।।
जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्।।२९।।
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः।।३०।।

अत्र संग्रहश्लोकः

स्फुटं भगवतो भक्तिराहिता कल्पमञ्जरी।
साधकेच्छासमुचितां येनाशां परिपूरयेत्।।७।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(ज्ञानविज्ञानयोगो नाम) सप्तमोऽध्यायः।।७।।

## अथ

## अष्टमोऽध्यायः

### अर्जुन उवाच

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम।

अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते।।१।।

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन।

प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः।।२।।

### श्रीभगवानुवाच

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।

भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः।।३।।

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्।

अधियज्ञोऽहमेवात्र देहे देहभृतां वर।।४।।

अन्तकालेऽपि मामेव स्मरन्मुक्त्वा कलेवरम्।

यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः।।५।।

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः।।६।।
तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च।
मदर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम्।।७।।
अभ्यासयोगयुक्तेन चेतसानन्यगामिना।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन्।।८।।

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात्।।९।।
प्रयाणकाले मनसाचलेन
भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम्।।१०।।

यदक्षरं वेदविदो वदन्ति

विशन्ति यद्यतयो वीतरागाः।

यदिच्छन्तो ब्रह्मचर्यं चरन्ति

तत्ते पदं संग्रहेणाभिधास्ये।।११।।

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।

मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम्।।१२।।

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।

यः प्रयाति त्यजन्देहं स याति परमां गतिम्।।१३।।

अनन्यचेताः सततं यो मां स्मरति नित्यशः।

तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः।।१४।।

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।

नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः।।१५।।

आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।

मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते।।१६।।

सहस्रयुगपर्यन्तमहर्यें ब्रह्मणो विदुः।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः।।१७।।
अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके।।१८।।
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे।।१९।।
परस्तस्मात्तु भावोऽन्यो व्यक्ताव्यक्तः सनातनः।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति।।२०।।
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम।।२१।।
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यं प्राप्य न पुनर्जन्म लभन्ते योगिनोऽर्जुन।।२२।।
यस्यान्तःस्थानि भूतानि यत्र सर्वं प्रतिष्ठितम्।
यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ।।२३।।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः।।२४।।
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते।।२५।।
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
अनयोर्यात्यनावृत्तिमाद्ययावर्ततेऽन्यया।।२६।।
नैते सृती पार्थ जानन्योगी मुह्यति कश्चन।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन।।२७।।

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम्।
अभ्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम्।।२८।।

## अत्र संग्रहश्लोकः

सर्वतत्त्वगतत्वेन विज्ञाते परमेश्वरे।
अन्तर्बहिर्न सावस्था न यस्यां भासते विभुः।।८।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(अक्षरब्रह्मयोगो नाम) अष्टमोऽध्यायः।।८।।

अथ

## नवमोऽध्यायः

श्रीभगवानुवाच

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात्।।१।।
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्।।२।।
अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि।।३।।
मया ततमिदं कृत्स्नं जगदव्यक्तमूर्तिना।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः।।४।।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः।।५।।
यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय।।६।।

एवं हि सर्वभावेषु चराम्यनभिलक्षितः।
भूतप्रकृतिमास्थाय सहैव च विनैव च।।७।।
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्।।८।।
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्।।९।।
न च मां तानि कर्माणि निबध्नन्ति धनञ्जय।
उदासीनवदासीनमसक्तं तेषु कर्मसु।।१०।।
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते।।११।।
अवजानन्ति मां मूढा मानुषीं तनुमास्थितम्।
परं भावमजानन्तो ममाव्ययमनुत्तमम्।।१२।।
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।
आसुरीं राक्षसीं चैव प्रकृतिं मोहनीं श्रिताः।।१३।।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्।।१४।।
सततं कीर्तयन्तश्च यतन्तश्च यतव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते।।१५।।
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्।।१६।।
अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्।।१७।।
पिताहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च।।१८।।
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम्।।१९।।
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन।।२०।।

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान्॥२१॥
ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते॥२२॥
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥२३॥
येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्॥२४॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।
नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते॥२५॥

यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्।।२६।।
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः।।२७।।
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्।।२८।।
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि।।२९।।
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्।।३०।।
अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः।।३१।।
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानेऽहं न मद्भक्तः प्रणश्यति।।३२।।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्।।३३।।
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्।।३४।।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः।।३५।।

अत्र संग्रहश्लोकः

अद्वैते ब्रह्मणि परा सर्वानुग्रहशालिनी।
शक्तिर्विजृम्भते तेन यतनीयं तदाप्तये।।९।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(राजविद्याराजगुह्ययोगो नाम) नवमोऽध्यायः।।

अथ

## दशमोऽध्यायः।।

### श्रीभगवानुवाच

भूय एव महाबाहो श्रृणु मे परमं वचः।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया।।१।।

न मे विदुः सुरगणाः प्रभवं न महर्षयः।
अहमादिर्हि देवानां महर्षीणां च सर्वशः।।२।।

यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते।।३।।

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः।
सुखं दुःखं भवो भावो भयं चाभयमेव च।।४।।

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः।।५।।

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः।।६।।

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः।।७।।
अयं सर्वस्य प्रभव इतः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः।।८।।
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति रमयन्ति च।।९।।
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मां प्रापयन्ति ते।।१०।।
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता।।११।।

अर्जुन उवाच

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्।।१२।।
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि माम्।।१३।।

सर्वमेतदृतं मन्ये यन्मे वदसि केशव।
नहि ते भगवन्व्यक्तिं विदुर्देवा महर्षयः।।१४।।
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम।
भूतभावन भूतेश देवदेव जगत्पते।।१५।।
वक्तुमर्हस्यशेषेण विभूतीरात्मनः शुभाः।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि।।१६।।
कथं विद्यां महायोगिंस्त्वामहं परिचिन्तयन्।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया।।१७।।
विस्तरेणात्मनो योगं विभूतिं च जनार्दन।
भूयः कथय तृप्तिर्हि श्रृण्वतो नास्ति मेऽमृतम्।।१८।।

श्रीभगवानुवाच

हन्त ते कथयिष्यामि विभूतीरात्मनः शुभाः।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे।।१९।।
अहमात्मा गुडाकेश सर्वभूताशयस्थितः।
अहमादिश्च मध्यं च भूतानामन्त एव च।।२०।।

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी।।२१।।
वेदानां सामवेदोऽहं देवानामस्मि वासवः।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना।।२२।।
रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम्।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम्।।२३।।
परोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम्।
सेनान्यामप्यहं स्कन्दः सरसामस्मि सागरः।।२४।।
महर्षीणां भृगुरहं गिरामप्येकमक्षरम्।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः।।२५।।
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः।।२६।।
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम्।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम्।।२७।।

आयुधानामहं वज्रं धेनूनामस्मि कामधुक्।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः।।२८।।
अनन्तश्चास्मि नागानां वरुणो यादसामहम्।
पितॄणामर्यमा चास्मि यमः संयमतामहम्।।२९।।
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम्।।३०।।
पवनः पवतामस्मि रामः शस्त्रभृतामहम्।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी।।३१।।
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम्।।३२।।
अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः।।३३।।
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम्।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा।।३४।।
बृहत्साम तथा साम्नां गायत्री छन्दसामहम्।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः।।३५।।

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम्।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम्।।३६।।
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः।
मुनीनामप्यहं व्यासः कवीनामुशना कविः।।३७।।
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम्।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम्।।३८।।
यच्चापि सर्वभूतानां बीजं तदहमर्जुन।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम्।।३९।।
नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया।।४०।।
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्।।४१।।
अथवा बहुनैतेन किं ज्ञानेन तवार्जुन।
विष्टभ्याहमिदं कृत्स्नमेकांशेन जगत्स्थितः।।४२।।

अत्र संग्रहश्लोकः

इच्छायामिन्द्रिये वापि यदेवायाति गोचरम्।
हठाद्विलापयंस्तत्तत्प्रशान्तं ब्रह्म भावयेत्।।१०।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(विभूतियोगोनाम) दशमोऽध्यायः।।१०।।

अथ

## एकादशोऽध्यायः

### अर्जुन उवाच

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम।।१।।

भवाप्ययौ हि भूतानां श्रुतौ विस्तरतो मया।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम्।।२।।

एवमेतद्यथात्थ त्वमात्मानं परमेश्वरम्।
द्रष्टुमिच्छाम्यहं रूपमैश्वरं पुरुषोत्तम।।३।।

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो।
योगीश्वर ततो मे त्वं दर्शयात्मानमव्ययम्।।४।।

### श्रीभगवानुवाच

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च।।५।।

पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि पाण्डव।।६।।
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि।।७।।
नतु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम्।।८।।

संजय उवाच

एवमुक्त्वा ततो राजन् महायोगीश्वरो हरिः।
दर्शयामास पार्थाय परमं रूपमैश्वरम्।।९।।
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम्।।१०।।
दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम्।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम्।।११।।
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः।।१२।।

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा।।१३।।
ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत।।१४।।

अर्जुन उवाच

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान्।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दीप्तान्।।१५।।
अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम्।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप।।१६।।
किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम्।

पश्यामि त्वां दुर्निरीक्षं समन्ता-

द्दीप्तानलार्कद्युतिमप्रमेयम्।।१७।।

त्वमक्षरं परमं वेदितव्यं

त्वमस्य विश्वस्य परं निधानम्।

त्वमव्ययः सात्त्वतधर्मगोप्ता

सनातनस्त्वं पुरुषो मतो मे।।१८।।

अनादिमध्यान्तमनन्तवीर्य-

मनन्तबाहुं शशिसूर्यनेत्रम्।

पश्यामि त्वां दीप्तहुताशवक्त्रं

स्वतेजसा विश्वमिदं तपन्तम्।।१९।।

द्यावापृथिव्योरिदमन्तरं हि

व्याप्तं त्वयैकेन दिशश्च सर्वाः।

दृष्ट्वाद्भुतं रूपमिदं तवेद्ग-

ग्लोकत्रयं प्रव्यथितं महात्मन्।।२०।।

अमी हि त्वा सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति।
स्वस्तीति चोक्त्वैव महर्षिसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः।।२१।।

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे।।२२।।

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम्।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम्।।२३।।

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम्।

दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा

धृतिं न विन्दामि शमं च विष्णो।।२४।।

दंष्ट्राकरालानि च ते मुखानि

दृष्ट्वैव कालानलसन्निभानि।

दिशो न जाने न लभे च शर्म

प्रसीद देवेश जगन्निवास।।२५।।

अमी सर्वे धृतराष्ट्रस्य पुत्राः

सर्वे सहैवावनिपालसङ्घैः।

भीष्मो द्रोणः सूतपुत्रस्तथासौ

सहास्मदीयैरपि योधमुख्यैः।।२६।।

वक्त्राणि ते त्वरमाणा विशन्ति

दंष्ट्राकरालानि भयानकानि।

केचिद्विलग्ना दशनान्तरेषु

सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः।।२७।।

नानारूपैः पुरुषैर्बाध्यमाना

विशन्ति ते वक्त्रमचिन्त्यरूपम्।

यौधिष्ठिरा धार्तराष्ट्राश्च योधाः

शस्त्रैः कृत्ता विविधैः सर्व एव।।२८।।

त्वत्तेजसा निहता नूनमेते

तथाहीमे त्वच्छरीरे प्रविष्टाः।

यथा नदीनां बहवोऽम्बुवेगाः

समुद्रमेवाभिमुखा व्रजन्ति।।२९।।

तथा तवामी नरलोकवीरा

विशन्ति वक्त्राण्यभितो ज्वलन्ति।

यथा प्रदीप्तं ज्वलनं पतङ्गा

विशन्ति नाशाय समृद्धवेगाः।।३०।।

तथैव नाशाय विशन्ति लोका-

स्तवापि वक्त्राणि समृद्धवेगाः।

लेलिह्यसे ग्रसमानः समन्ता-

ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः।।३१।।

तेजोभिरापूर्य जगत्समग्रं

भासस्तवोग्राः प्रतपन्ति विष्णो।

आख्याहि मे को भवानुग्ररूपो

नमोऽस्तु ते देववर प्रसीद।।३२।।

विज्ञातुमिच्छामि भवन्तमाद्यं

नहि प्रजानामि तव प्रवृत्तिम्।

श्रीभगवानुवाच

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो-

ल्लोकान्समाहर्तुमिह प्रवृत्तः।

ऋतेऽपि त्वा न भविष्यन्ति सर्वे

येऽवस्थिताः प्रत्यनीकेषु योधाः।।३३।।

तस्मात्त्वमुत्तिष्ठ यशो लभस्व

जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम्।

मयैवैते निहताः पूर्वमेव

निमित्तमात्रं भव सव्यसाचिन्।।३४।।

द्रोणं च भीष्मं च जयद्रथं च

कर्णं तथान्यानपि लोकवीरान्।

मया हतांस्त्वं जहि मा व्यथिष्ठा

युध्यस्व जेतासि रणे सपत्नान्।।३५।।

संजय उवाच

एतच्छ्रुत्वा वचनं केशवस्य

कृताञ्जलिर्वेपमानः किरीटी।

नमस्कृत्वा भूय एवाह कृष्णं

सगद्गदं भीतभीतः प्रणम्य।।३६।।

अर्जुन उवाच

स्थाने हृषीकेश तव प्रकीर्त्या

जगत्प्रहृष्यत्यनुरज्यते च।

रक्षांसि भीतानि दिशो द्रवन्ति

सर्वे नमस्यन्ति च सिद्धसङ्घाः ।।३७।।

कस्माच्चैते न नमेयुर्महात्मन्

गरीयसे ब्रह्मणोऽप्यादिकर्त्रे।

अनन्त देवेश जगन्निवास

त्वमक्षरं सदसत्तत्परं यत्।।३८।।

त्वमादिदेवः पुरुषः पुराण-

स्त्वमस्य विश्वस्य परं निधानम्।

वेत्तासि वेद्यं च परं च धाम

त्वयाततं विश्वमनन्तरूपम्।।३९।।

वायुर्यमोऽग्निर्वरुणः शशाङ्कः

प्रजापतिस्त्वं प्रपितामहश्च।

अनादिमानप्रतिमप्रभावः

सर्वेश्वरः सर्वमहाविभूते।।४०।।

नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते।
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व।।४१।।
नहि त्वदन्यः कश्चिदपीह देव
लोकत्रये दृश्यतेऽचिन्त्यकर्मा।
अनन्तवीर्योऽमितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः।।४२।।
सखेति मत्वा प्रसभं यदुक्तो
हे कृष्ण हे यादव हे सखे च।
अजानता महिमानं तवेमं
मया प्रमादात्प्रणयेन वापि।।४३।।
यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु।

एकोऽथवाप्यच्युत तत्समक्षं

तत्क्षामये त्वामहमप्रमेयम्।।४४।।

पितासि लोकस्य चराचरस्य

त्वमस्य विश्वस्य गुरुर्गरीयान्।

न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो

लोकत्रयेऽप्यप्रतिमप्रभावः।।४५।।

तस्मात्प्रणम्य प्रणिधाय कायं

प्रसादये त्वामहमीशमीढ्यम्।

पितेव पुत्रस्य सखेव सख्युः

प्रियः प्रियस्यार्हसि देव सोढुम्।।४६।।

दिव्यानि कर्माणि तवाद्भुतानि

पूर्वाणि पूर्वे ऋषयः स्मरन्ति।

नान्योऽस्ति कर्ता जगतस्त्वमेको

धाता विधाता च विभुर्भवश्च।।४७।।

तवाद्भुतं किं नु भवेदसह्यं
किं वा शक्यं परतः कीर्तयिष्ये।
कर्तासि सर्वस्य यतः स्वयं वै
विभो ततः सर्वमिदं त्वमेव।।४८।।

अत्यद्भुतं कर्म न दुष्करं ते
कर्मोपमानं नहि विद्यते ते।
न ते गुणानां परिमाणमस्ति
न तेजसो नापि बलस्य नर्द्धेः।।४९।।

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास।।५०।।

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव।

तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते।।५१।।

श्रीभगवानुवाच

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात्।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम्।।५२।।

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर।।५३।।

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम्।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य।।५४।।

संजय उवाच

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा।।५५।।

अर्जुन उवाच

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः।।५६।।

श्रीभगवानुवाच

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः।।५७।।
नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा।।५८।।
भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप।।५९।।

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव।।६०।।

अत्र संग्रहश्लोकः

शुद्धाशुद्धविमिश्रोत्थसंविदैक्यविमर्शनात्।
भूर्भुवःस्वस्त्रयं पश्यन्समत्वेन समो मुनिः।।११।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(विश्वरूपदर्शनयोगो नाम) एकादशोऽध्यायः।।११।।

अथ

द्वादशोऽध्यायः

अर्जुन उवाच

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः।।१।।

श्रीभगवानुवाच

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः।।२।।
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्।।३।।
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः।।४।।
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते।।५।।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते।।६।।
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्।।७।।
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवत्स्यसि त्वं मय्येव योगमुत्तममास्थितः।।८।।
अथावेशयितुं चित्तं न शक्नोषि मयि स्थिरम्।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय।।९।।
अभ्यासेऽप्यसमर्थः सन्मत्कर्मपरमो भव।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि।।१०।।
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमास्थितः।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्।।११।।
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरा।।१२।।

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।
निर्ममो निरहंकारः समदुःखसुखः क्षमी।।१३।।
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः।।१४।।
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः।।१५।।
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।
सर्वारम्भफलत्यागी यो मद्भक्तः स मे प्रियः।।१६।।
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति।
शुभाशुभफलत्यागी भक्तिमान्यः स मे प्रियः।।१७।।
समः शत्रौ च मित्रे च तथा मानावमानयोः।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः।।१८।।
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येनकेनचित्।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः।।१९।।

ये तु धर्मामृतमिदं यथोक्तं पर्युपासते।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः।।२०।।

अत्र संग्रहश्लोकः

परमानन्दवैवश्यसञ्जातावेशसंपदः।
स्वयं सर्वास्ववस्थासु ब्रह्मसत्ता ह्ययत्नतः।।१२।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(भक्तियोगोनाम) द्वादशोऽध्यायः।।१२।।

अथ

त्रयोदशोऽध्यायः

अर्जुन उवाच

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव।।१।।

श्रीभगवानुवाच

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेद तं प्राहुः क्षेत्रज्ञ इति तद्विदः।।२।।
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम।।३।।
तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत्।
स च यो यत्स्वभावश्च तत्समासेन मे श्रृणु।।४।।
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम्।।५।।

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः।।६।।
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम्।।७।।
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः।।८।।
इन्द्रियार्थेषु वैराग्यमनहंकार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्।।९।।
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु।।१०।।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।
विविक्तदेशसेवित्वमरतिर्जनसंसदि।।११।।
अध्यात्मज्ञाननिष्ठत्वं तत्त्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा।।१२।।

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते।।१३।।
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति।।१४।।
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च।।१५।।
बहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्।।१६।।
अविभक्तं विभक्तेषु विभक्तमिव च स्थितम्।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च।।१७।।
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।
ज्ञानज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्।।१८।।
एतत्क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते।।१९।।

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्।।२०।।
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते।।२१।।
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु।।२२।।
उपद्रषाटानुमन्ता च भर्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः।।२३।।
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते।।२४।।
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे।।२५।।
अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः।।२६।।

यावत्किञ्चित्संभवति सत्त्वं स्थावरजङ्गमम्।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ।।२७।।
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति।।२८।।
समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्।।२९।।
प्रकृत्यैव हि कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति।।३०।।
यदा भूतपृथग्भावमेकस्थमनुपश्यति।
तत एव च विस्तारं ब्रह्म संपद्यते तदा।।३१।।
अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते।।३२।।
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते।।३३।।

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत।।३४।।
क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम्।।३५।।

अत्र संग्रहश्लोकः

पुमान्प्रकृतिरित्येष भेदः संमूढचेतसाम्।
परिपूर्णास्तु मन्यन्ते निर्मलात्ममयं जगत्।।१३।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(क्षेत्रक्षेत्रज्ञविभागयोगो नाम) त्रयोदशोऽध्यायः।।१३।।

## अथ

## चतुर्दशोऽध्यायः

### श्रीभगवानुवाच

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः।।१।।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च।।२।।

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत।।३।।

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता।।४।।

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम्।।५।।

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ।।६।।

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम्।।७।।
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत।।८।।
सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत।।९।।
रजस्तमश्चाभिभूय सत्त्वं भारत वर्धते।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा।।१०।।
सर्वद्वारेषु देहेऽस्मिन्प्रकाशमुपजायते।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत।।११।।
लोभः प्रवृत्तिरारम्भः कर्मणामशमश्च तृट्।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ।।१२।।
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन।।१३।।

यदा सत्त्वे विवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते।।१४।।
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते।
तथा प्रलीनस्तमसि मूढयोनिषु जायते।।१५।।
कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम्।।१६।।
सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ जायेते तमसोऽज्ञानमेव च।।१७।।
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः।।१८।।
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति।।१९।।
गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान्।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते।।२०।।

## अर्जुन उवाच

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते।।२१।।

## श्रीभगवानुवाच

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति।।२२।।
उदासीनवदासीनो गुणैर्यो न विचाल्यते।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते।।२३।।
समदुःखसुखस्वस्थः समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः।।२४।।
मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।
सर्वारम्भफलत्यागी गुणातीतः स उच्यते।।२५।।
मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते।।२६।।

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च।।२७।।

अत्र संग्रहश्लोकः

लसद्भक्तिरसावेशहीनाहंकारविभ्रमः।
स्थितेऽपि गुणसंमर्दे गुणातीतः समो यतिः।।१४।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(गुणत्रयविभागयोगो नाम) चतुर्दशोऽध्यायः।।१४।।

अथ

पञ्चदशोऽध्यायः

श्रीभगवानुवाच

ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्।।१।।

अधश्चोर्ध्वं प्रसृता यस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके।।२।।

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण शितेन च्छित्त्वा।।३।।

ततः पदं तत्परिमार्गितव्यं
यस्मिन्गतो न निवर्तेत भूयः।

तमेव चाद्यं पुरुषं प्रपद्ये-

यतः प्रवृत्तिः प्रसृता पुराणी ।।४।।

निर्मानमोहा जितसङ्गदोषा

अध्यात्मनित्या विनिवृत्तकामाः ।

द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-

र्गच्छन्त्यमूढाः पदमव्ययं तत् ।।५।।

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।

यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।।६।।

ममैवांशो जीवलोके जीवभूतः सनातनः ।

मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।।७।।

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।

गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ।।८।।

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।

अधिष्ठाय मनश्चायं विषयानुपसेवते ।।९।।

तिष्ठन्तमुत्क्रामन्तं वा भुञ्जानं वा गुणान्वितम्।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः।।१०।।
यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः।।११।।
यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।।१२।।
गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः।।१३।।
अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।।१४।।
सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम्।।१५।।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।।१६।।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः।।१७।।

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।।१८।।

यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत।।१९।।

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ।
एतदबुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत।।२०।।

अत्र संग्रहश्लोकः

हत्वा द्वैतमहामोहं कृत्वा ब्रह्ममयीं चितिम्।
लौकिके व्यवहारेऽपि मुनिर्नित्यं समाविशेत्।।१५।।

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(पुरुषोत्तमयोगो नाम) पञ्चदशोऽध्यायः।।१५।।

## अथ

## षोडशोऽध्यायः

### श्रीभगवानुवाच

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्।।१।।
अहिंसा सत्यमक्रोधस्त्यागोऽसक्तिरपैशुनम्।
दया भूतेष्वलौल्यं च मार्दवं ह्रीरचापलम्।।२।।
तेजः क्षमा धृतिस्तुष्टिरद्रोहो नातिमानिता।
भवन्ति संपदं दैवीमभिजातस्य भारत।।३।।
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम्।।४।।
दैवी संपद्विमोक्षाय निबन्धायासुरी मता।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव।।५।।
द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च।
दैवो विस्तरतः प्रोक्त आसुरं पार्थ मे श्रृणु।।६।।

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते।।७।।
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसंभूतमकिंचित्कमहेतुकम्।।८।।
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः।।९।।
काममाश्रित्य दुष्पूरं दम्भलोभमदान्विताः।
असद्ग्रहाश्रिताः क्रूराः प्रचरन्त्यशुचिव्रताः।।१०।।
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमा एतावदिति निश्चिताः।।११।।
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।
ईहन्ते कामभोगार्थानन्यायेनार्थसञ्चयान्।।१२।।
इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्।।१३।।

असौ मया हतः शत्रुर्हनिष्ये चापरानपि।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी।।१४।।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः।।१५।।
अनेकचित्ता विभ्रान्ता मोहस्यैव वशं गताः।
प्रसक्ताः कामभोगेषु पतन्ति निरयेऽशुचौ।।१६।।
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्।।१७।।
अहंकारं बलं दर्पं कामं क्रोधं स संश्रिताः।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः।।१८।।
तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।
क्षिपाम्यजस्त्रमशुभास्वासुरीष्वेव योनिषु।।१९।।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्।।२०।।

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्।।२१।।
एतैर्वियुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्।।२२।।
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।।२३।।
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि।।२४।।

अत्र संग्रहश्लोकः

अबोधे स्वात्मबुद्ध्यैव कार्यं नैव विचारयेत्।
किन्तु शास्त्रोक्तविधिना शास्त्रं बोधविवर्धनम्।।१६।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(दैवासुरसंपद्विभागयोगो नाम) षोडशोऽध्यायः।।१६।।

## अथ

## सप्तदशोऽध्यायः

### अर्जुन उवाच

ये शास्त्रविधिमुत्सृज्य वर्तन्ते श्रद्धयान्विताः।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः।।१।।

### श्रीभगवानुवाच

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।
सात्त्विकी राजसी चैव तामसी चेति ताः श्रृणु।।२।।
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः।।३।।
यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः।
भूतप्रेतपिशाचांश्च यजन्ते तामसा जनाः।।४।।
अशास्त्रविहितं घोरं तपस्तप्यन्ति ये जनाः।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः।।५।।

कर्षयन्तः शरीरस्थं भूतग्राममचेतनम्।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान्।।६।।
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं श्रृणु।।७।।
आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः।।८।।
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः।।९।।
यातयामं गतरसं पूति पर्युषितं च यत्।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्।।१०।।
अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमित्येव मनः समाधाय स सात्त्विकः।।११।।
अभिसन्धाय तु फलं दम्भार्थमपि चैव यः।
इज्यते विद्धि तं यज्ञं राजसं चलमध्रुवम्।।१२।।

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते।।१३।।
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते।।१४।।
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते।।१५।।
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते।।१६।।
श्रद्धया परयोपेतं तपस्तत्त्रिविधं नरैः।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते।।१७।।
सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम्।।१८।।
मूढग्रहेणात्मनो यत्पीडया क्रियते तपः।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्।।१९।।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्।।२०।।
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते च परिक्लिष्टं तद्राजसमिति स्मृतम्।।२१।।
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम्।।२२।।
ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा।।२३।।
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्।।२४।।
तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः।।२५।।
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ गीयते।।२६।।

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते।।२७।।
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह।।२८।।

अत्र संग्रहश्लोकः

स एव कारकावेशः क्रिया सैवाविशेषिणी।
तथापि विज्ञानवतां मोक्षार्थे पर्यवस्यति।।१७।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(श्रद्धात्रयविभागयोगोनाम) सप्तदशोऽध्यायः।।१७।।

अथ

अष्टादशोऽध्यायः

अर्जुन उवाच

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन।।१।।

श्रीभगवानुवाच

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः।।२।।
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे।।३।।
निश्चयं श्रृणु मे तत्र त्यागे भरतसत्तम।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः।।४।।
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्।।५।।

एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्।।६।।
नियतस्य च संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः।।७।।
दुःखमित्येव यः कर्म कायक्लेशभयात्त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्।।८।।
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः।।९।।
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जति।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः।।१०।।
नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते।।११।।
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्।
भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचित्।।१२।।

पञ्चेमानि महाबाहो कारणानि निबोध मे।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्।।१३।।
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधा च पृथक्चेष्टा दैवमेवात्र पञ्चमम्।।१४।।
शरीरवाङ्मनोभिर्हि यत्कर्मारभतेऽर्जुन।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः।।१५।।
तत्रैवंसति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः।।१६।।
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते।।१७।।
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः।।१८।।
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि।।१९।।

सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्।।२०।।
पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्।
वेत्ति सर्वेषु भूतेषु तद्राजसमिति स्मृतम्।।२१।।
यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहेतुकम्।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम्।।२२।।
नियतं सङ्गरहितमरागद्वेषतः कृतम्।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते।।२३।।
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः।
क्रियते क्लेशबहुलं तद्राजसमिति स्मृतम्।।२४।।
अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते।।२५।।
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते।।२६।।

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्ता राजसः परिकीर्त्यते।।२७।।
अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः।
विषादी दीर्घसूत्रश्च कर्ता तामस उच्यते।।२८।।
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं श्रृणु।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय।।२९।।
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या बुद्धिर्वेद सा सात्त्विकी मता।।३०।।
यया धर्ममधर्मं च कार्यं चाकार्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी।।३१।।
अधर्मं धर्ममिति या बुद्ध्यते तमसान्विता।
सर्वार्थान्विपरीतांश्च बुद्धिः सा तामसी मता।।३२।।
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।
योगेनाव्यभिचारिण्या धृतिः सा सात्त्विकी मता।।३३।।

यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी।।३४।।
यया स्वप्नं भयं शोकं विषादं मोहमेव च।
न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता।।३५।।
सुखं त्विदानीं त्रिविधं श्रृणु मे भरतर्षभ।
अभ्यासाद्रमते यत्र दुःखान्तं च नियच्छति।।३६।।
यत्तदात्वे विषमिव परिणामेऽमृतोपमम्।
तत्सुखं सात्त्विकं विद्यादात्मबुद्धिप्रसादजम्।।३७।।
विषयेन्द्रियसंयोगाद्यत्तदात्वेऽमृतोपमम्।
परिणामे विषमिव तद्राजसमिति स्मृतम्।।३८।।
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्।।३९।।
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः।।४०।।

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः।।४१।।
शमो दमस्तथा शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्।।४२।।
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्।।४३।।
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।
पर्युत्थानात्मकं कर्म शूद्रस्यापि स्वभावजम्।।४४।।
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु।।४५।।
यतः प्रवृत्तिर्भूतानां येन विश्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।।४६।।
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्।।४७।।

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः।।४८।।
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति।।४९।।
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे।
समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा।।५०।।
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च।।५१।।
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः।।५२।।
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते।।५३।।
ब्रह्मभूतः प्रसन्नात्मा न शोचति न हृष्यति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।।५४।।

भक्त्या मामभिजानाति योऽहं यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।।५५।।
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्।।५६।।
चेतसा सर्वकर्माणि मयि संन्यस्य भारत।
बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव।।५७।।
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
अथ चेत्त्वमहंकारं न मोक्ष्यसि विनङ्क्ष्यसि।।५८।।
यदहंकारमाश्रित्य न योत्स्य इति मन्यसे।
मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति।।५९।।
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत्।।६०।।
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया।।६१।।

तमेव शरणं गच्छ सर्वभावेन भारत।
मत्प्रसादात्परां सिद्धिं स्थानं प्राप्स्यसि शाश्वतम्।।६२।।
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु।।६३।।
सर्वगुह्यतमं भूयः श्रृणु मे परमं वचः।
इष्टोऽसि मे दृढमतिस्ततो वक्ष्यामि ते हितम्।।६४।।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे।।६५।।
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।।६६।।
इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति।।६७।।
य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा स मामेष्यत्यसंशयः।।६८।।
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भवति न च मे तस्मादन्यः प्रियतरो भुवि।।६९।।

अध्येष्यते च य इमं धर्म्यं संवादमावयोः।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः।।७०।।
श्रद्धावाननसूयश्च श्रृणुयादपि यो नरः।
सोऽपि मुक्तः शुभांल्लोकान्प्राप्नुयात्पुण्यकर्मणाम्।।७१।।
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनञ्जय।।७२।।

अर्जुन उवाच

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव।।७३।।

सञ्जय उवाच

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।
संवादमिममश्रौषमद्भुतं रोमहर्षणम्।।७४।।
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यतरं महत्।
योगं योगीश्वरात्कृष्णात्साक्षात्कथयतः स्वयम्।।७५।।

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम्।
केशवार्जुनयोः पुण्यं हृष्यामि च पुनः पुनः।।७६।।
तच्च संस्मृत्य परमं रूपमत्यद्भुतं हरेः।
विस्मयो मे महाराज प्रहृष्ये च पुनः पुनः।।७७।।
यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम।।७८।।

अत्र संग्रहश्लोकः

भङ्क्त्वा ज्ञानविमोहमन्थरमयीं सत्त्वादिभिन्नां धियं
प्राप्य स्वात्मविभूतिसुन्दरतया विष्णुं विकल्पातिगम्।
यत्किंचित्स्वरसोद्यदिन्द्रियनिजव्यापारमात्रस्थिते-
र्हेलातः कुरुते तदस्य सकलं संपद्यते शङ्करम्।।१८।।

***

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्त-
पादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे
(मोक्षसन्यासयोग नाम) अष्टादशोऽध्यायः।।१८।।

श्रीमान्कात्यायनोऽभूद्वररुचिसदृशः प्रस्फुरद्बोधतृप्त-
स्तद्वंशालङ्कृतो यः स्थिरमतिरभवत्सौशुकाख्योऽतिविद्वान्।
विप्रः श्रीभूतिराजस्तदनु समभवत्तस्य सूनुर्महात्मा
येनामी सर्वलोकास्तमसि निपतिताः प्रोद्धृता भानुनेव।।१।।

(इस श्लोक में आचार्यपाद अभिनवगुप्त जी अपने गुरु के वंश का परिचय देते हैं)-

मोक्ष-लक्ष्मी से सम्पन्न तथा सूर्य के समान महान तेजस्वी और परमात्म-ज्ञान से तृप्त बने हुए कात्यायन नाम वाले ब्राह्मण के वंश से, दृढ़ बुद्धि वाले 'सौशुक' नाम के ब्राह्मण प्रकांड विद्वान् थे। उनके बाद उनके सुपुत्र महात्मा श्री भूतिराज नामक ब्राह्मण उत्पन्न हुए थे जिन्होंने भगवान् सूर्य की भांति अंधकार मे पड़े हुए सभी सांसारिक जनों को उस अज्ञान के अंधेरे से उभार लिया था।

तच्चरणकमलमधुपो भगवद्गीतार्थसंग्रहं व्यदधात्।
अभिनवगुप्तः सद्द्विजलोटककृतचोदनावशतः।।२।।

उन्हीं आचार्य भूतिराज के चरण-कमलों का भौंरा बना हुआ (मैं) अभिनवगुप्त 'भगवद्गीतार्थसंग्रह' नाम वाली व्याख्या अति श्रेष्ठ 'लोटक' नामक ब्राह्मण की प्रेरणा से करने लगा।

अत इदमयथार्थं वा यथार्थमपि सर्वथा नैव
विदुशामसूयनीयं कृत्यमिदं बान्धवार्थं हि।।३।।

अतः यह व्याख्या युक्तियुक्त है या अयुक्त है इसके लिए विद्वानों को मुझ से भूल कर भी ईर्षा नहीं करनी चाहिए क्योंकि मैं ने उस व्याख्या की रचना बन्धु जनों के हित के लिए ही की है। (शिष्यों के लिए नहीं की है इसी लिए इस व्याख्या में त्रिक-सिद्धान्त की झलक पूर्ण रूप से नहीं है।)

अभिनवरूपा शक्तिस्तद्गुप्तो यो महेश्वरो देवः।
तदुभययामलरूपमभिनवगुप्तं शिवं वन्दे।।४।।

परमात्मा महेश्वर की शक्ति अभिनवा है--प्रतिक्षण नवीन रूप से विकसित होती है।

उस अभिनवा शक्ति से जो महादेव सदा गुप्त रहते हैं। अतः इस अभिनवा शक्ति के तथा गुप्त महेश्वर के संयह रूप यामल स्वरूप अभिनवगुप्त परमेश्वरको मैं प्रणाम करता हूँ।

**परिपूर्णोऽयं श्रीमद्भगवद्गीतार्थसंग्रहः।**

**कृतिस्त्रिनयनचरणसरोरुहचिन्तनलब्धप्रसिद्धेरभिनवगुप्तस्येति शिवम्।।**

--:-o:-*:-o-:--

**सांख्ययोगादिशास्त्रज्ञः पाणिनीये कृतश्रमः।**
**शिवार्करश्मिसंपातव्याकोशहृदयाम्बुजः।।**
**महामाहेश्वरः श्रीमान्राजानकमहेश्वरः।**
**शैवशास्त्रगुरुः स मे वाक्पुष्पैरस्तु पूजितः।।**

सांख्य तथा योग आदि शास्त्र को जानने वाले, पाणिनी व्याकरण को जानने में पतंजलि के समान तथा शिव रूपी सूर्य की किरणों के लगने से जिनका हृदय रूपी कमल एकदम विकसित हुआ था ऐसे महेश्वर शंकर के भक्त, मोक्ष-लक्ष्मी संपन्न उपनामधारी राजानक महेश्वरनाथ जी हमारे शैव-शास्त्र (त्रिक-शास्त्र) के गुरु हैं। अतः वे मेरी वाणी रूपी फूलों से पूजित बनें।

**शिवभक्त्यमृतास्वादात्तृणीकृतरसान्तरः।**
**राजानकलक्ष्मणाभिख्यः सुधीर्नारायणात्मजः।।**

शिव-भक्ति रूपी अमृत का अनुभव करने से अन्य विषय-संबधि रस जिन्हें तिनके की भांति सार-रहित दीख पड़े ऐसे राजानक लक्ष्मण जी नाम वाले प्रतिभाशाली (हमारे गुरुवर्य) श्री नारायण जी के पुत्र हैं।

**हृदन्तर्वर्त्तिना साक्षाच्छ्रीरामेण प्रचोदितः।**
**प्राकाश्यमनयद् गीताव्याख्यामभिनवोदिताम्।।**

हमारे हृदय में रहने वाले साक्षात् अवतार-तुल्य श्री राम जी, जो कि (हमारे गुरुवर्य के) परम गुरु थे, उन से आन्तरिक रूप से प्रेरित होकर हमने (हमारे गुरुवर्य ने) यह अभिनवगुप्त जी की गीता की व्याख्या का संकलन लोगों के सम्मुख (जून १, १९३३ को) रखा।

**इति निवेदयति शिवभक्तानुचरः राजानकलक्ष्मणः।**